॥ गुरुवरप्रार्थनापञ्चरत्नस्तोत्रम् ॥

श्रीगणेशाय नमः ॥

यं विज्ञातुं भृगुः स्वापितरमुपगतः पञ्चवारं यथाव-
    ज्ज्ञानादेवामृताप्तेः सततमनुपमं चिद्विवेकादि लब्ध्वा ।
तस्मै तुभ्यं नमः श्रीहरिहरगुरवे सच्चिदानन्दमुक्ता-
    नन्ताद्वैतप्रतीते न कुरु कितवतां पाहि मां दीनबन्धो ॥ १॥

यस्मान्नश्यस्य जन्मस्थितिविलयमिमे तैतिरीयाः पठन्ति
    स्वाविद्यामात्रयोगात्सुखशयनतले मुख्यतः स्वप्नवच्च ।
तस्मै तुभ्यं नमः श्रीहरिहरगुरवे सच्चिदानन्दमुक्ता-
    नन्ताद्वैतप्रतीते न कुरु कितवतां पाहि मां दीनबन्धो ॥ २॥

यो वेदान्तैकलक्ष्यः श्रुतिषु निवमितस्तैत्तिरीयैश्च
    काण्वैरन्यैरप्यानिषेकादुदयपरिमितं चारुसंस्कारभाजाम् ।
तस्मै तुभ्यं नमः श्रीहरिहरगुरवे सच्चिदानन्दमुक्ता-
    नन्ताद्वैतप्रतीते न कुरु कितवतां पाहि मां दीनबन्धो ॥ ३॥

यस्मिन्नेवावसन्नाः सकलनिगमवाङ्मौलयः सुप्तपुंसि
    प्रोक्तं तन्नाम यद्वन्निजमहिमगतध्वान्ततत्कार्यरूपे ।
तस्मै तुभ्यं नमः श्रीहरिहरगुरवे सच्चिदानन्दमुक्ता-
    नन्ताद्वैतप्रतीते न कुरु कितवतां पाहि मां दीनबन्धो ॥ ४॥

चित्त्वात्सङ्कल्पपूर्वं सृजति जगदिदं योगिवन्मायया यः
    स्वात्मन्येवाद्वितीये परमसुखदृशि स्वप्नवद्भूप्नि नित्ये ।
तस्मै तुभ्यं नमः श्रीहरिहरगुरवे सच्चिदानन्दमुक्ता-
    नन्ताद्वैतप्रतीते न कुरु कितवतां पाहि मां दीनबन्धो ॥ ५॥

इत्यच्युतविरचितं गुरुवरप्रार्थनापञ्चरत्नस्तोत्रं सम्पूर्णम् ॥